# श्रीहनूमत्स्तोत्रम्

आपन्नाखिललोकार्तिहारिणे श्रीहनूमते ।

अकस्मादागतोत्पातनाशनाय नमो नमः ॥ १॥

वामे करे वैरिभिदं वहन्तं शैलं परे शृङ्खलहारटङ्कम् ।

दधानमच्छाच्छसुवर्णवर्णं भजे ज्वलत्कुण्डलमाञ्जनेयम् ॥ २॥

विभीषण उवाच

सीतावियुक्ते श्रीरामे शोकदुःखभयापह ।

तापत्रयाग्निसंहारिन्नाञ्जनेय नमोऽस्तुते ॥ ३॥

आधिव्याधिमहामारिग्रहपीडापहारिणे ।

प्राणापहर्त्रे दैत्यानां रामप्रियहितात्मने ॥ ४॥

संसारसागरावर्तगतनिश्रान्तचेतसाम् ।

शरणागतसञ्जीवी सौमित्रिप्राणरक्षकः ॥ ५॥

सुचरित्रः सदानन्दः सर्वदा भक्तवत्सलः ।

सुरद्विषां सुसंहारी सुग्रीवानन्दवर्धनः ॥ ६॥

य इदं हनुमत्स्तोत्रं पठेन्नित्यं नरोत्तमः ।

सिद्ध्यन्ति सर्वकार्याणि धनधान्यसमृद्धयः ॥ ७॥

मृत्युदारिद्र्यनाशं च सङ्ग्रामे विजयी भवेत् ।

लाभं च राजवश्यं च सत्यं पावनकीर्तनम् ॥ ८॥

परं मन्त्रं परं तन्त्रं परयन्त्रं निवारयेत् ।

परविद्याविनाशं च ह्यात्ममन्त्रस्य रक्षकम् ॥ ९॥